मातृकान्यासवदित्याकाष्टाक्षरयोगेन लिपिन्यास उक्तः। यदुक्तं—शुद्धसविसर्गत्वान्तैरेवेति। पञ्चाशद्वारमुत्तममिति व्रिमप्रादिवारमधमादिकमित्यप्यर्थात् सूचितम्। शुद्धादिन्यासेऽपि समानमेतत्। अभिप्रायान्तरमाह—पञ्चाशन्मन्त्रैरिति। यद्यप्येक एवायं मन्त्रः किन्तु पञ्चाशल्लिपिवर्णसंयोगभेदतः पञ्चाशदेव मन्त्राः स्युरिति भावः। पञ्चाशद्वारमित्यस्यार्थोऽनेनोक्तः। यद्देहापि लिप्यपेक्षयैव पञ्चाशद्वारत्वं स्वप्रधाने प्रपञ्चयागे लेवं संभवतीति चाववोद्धव्यम्। प्रपञ्चयागस्वरूपं तावदेभिस्तृतीयलिपिभिरित्युक्तम्। तत्र मातृकान्यासवदित्यकारादिक्रमोऽत्रोच्यते। तदाह—प्रपञ्चयागक्रममिति। सत्यग्रहमण्डलत्रयादिहोममिति। तुशब्दस्य विशेषसूचनार्थत्वादिति भावः। प्राणाग्निहोत्रप्रपञ्चयागयोरिति तदीयमन्त्राभिप्रायम्। ऊर्ध्वादिकमिति। ब्रह्मा स्वाद्वैपिरस्येत्यत्र विहृतरीत्येति भावः। मूलाधारेति। मूलाधारे चतुर्दलपद्मे कर्णिकात्रिकोणं तन्मध्ये शक्तिः कुलेखा। तस्या मध्ये तदीयबिन्दुः वृत्ताकारस्तत्रापि मध्यभागे मध्यादिपञ्चदिक्षु कुण्डानि। वक्ष्यति च—शक्तेः सत्त्वनिविष्टमध्यमित्यादि। मध्येन्द्रवरुणेत्यादि च। अग्नीन् प्रज्वाल्येति। विद्वन्निस्वाहाकारगोचरतयोक्त एकोऽपि सन् होमद्रव्याणां पञ्चलात्तया विह्नतो दृश्यते। वक्ष्यति च—कल्पान्ताग्निशिखास्फुरत्कुहरकेष्वित्यादि। पादादिमस्तकान्तं व्याप्येति। तदावृतिमाह—स्वशरीरात्मकमिति। परमामृतेनेत्यवरमहात्यात्मनेति प्रागुक्तरूपेणेति भावः। एकोक्त्येति + + + ॐ ह्रीं चमिति। अत्रैवं प्रतिपत्तिः। प्रणवेन परामृतभूतात् स्वदेहादकारसदात्मरूपं वस्तूत्पाद्य प्रज्ञया तस्य प्रतीतिसिद्धार्थान्तरतावलापनेनामृतात्मकतामापद्य तदेव चमिति होम्यतया प्रतिपद्य परं ज्योतिषि जुहोमीति विनियुञ्जानः सोऽहं हंस इति तद्व्याप्यचिद्रूपे ततो विविक्तं प्रत्यग्ब्रह्मरूपं विभाव्य स्वाहेति तस्मिन्नेकवस्तुन्यग्नौ जुहुयादिति। मध्यादिकुण्डेष्विति। मध्यप्राग्वारुणसौम्यदक्षिणकुण्डेष्वित्यर्थः। आद्याक्षरान्तमिति। पञ्चपञ्चभिर्वर्णैरेकैकपर्यायेणेति भावः। अकारमिति। स ह्येकपञ्चाशो वर्णं इति भावः। प्रणवशक्तिबीजाभ्यामिति। प्रणवव्यापकेनोत्पादनं शक्तिव्यापकेन तस्यामृतोपादानमिति भेदः। शरीरशब्देनानभिव्यक्तावयवस्य ग्रहणम्। ताभ्यामेव वर्णाभ्याममृतपिण्डमिति। अग्नौ नैकोक्त्येति। कुण्डैकीकरणेनेति भावः। ॐ ह्रीं चमिति शतहोमद्वयेऽपि योऽयमर्पितोऽकारस्तस्यायं होमो विवक्षितः। इत्यादिनेति। सोऽहं हंसः स्वाहेत्ययमेव मन्त्रशेषोऽभिप्रेतः। नवपदन्यासमन्त्रैर्विधिवद्धुत्वेति। ॐ ह्रीं चं सं एं अरकालयणधिपतिं केतुं भगवन्तं परं ज्योतिषो-त्यादिरूपेण मन्त्रान्तरमुक्तम्। एवमन्यादिमण्डलत्रयन्यासमन्त्रैर्विधिवदित्य-

चापि द्रष्टव्यम् । अग्नीषोमन्यासमन्त्राभ्यां हंसन्यासमन्त्रेण चेत्यत्रापि समानमेतत् । मूलमन्त्रादियोगस्तु सर्वहोमेष्वपेक्षित एव । सप्तयह्न्यासवदित्यत्रापि विधिवदिति संबन्ध इष्यते । मण्डलत्रयादिष्वपि समानमेतत् । प्रणवेन स्वात्मस्थो भवेदिति सकृत् प्रणवमुच्चरन्निति भावः ॥ ४७ ॥

इह प्रपञ्चयागे प्रणवसत्त्यादिषु प्रतिपत्तिस्तावदुक्ता—आद्यैस्त्रिभेदैरिति । न तु तद्गतवर्णेषु प्रतिपत्तिरिति प्रतिपादनार्थं पञ्चज्ञानेन्द्रियावद्धा इत्याद्यारभ्यते । यद्यपि वर्णानां काननवृत्तसहस्रारेत्यत्र स्थानसम्बन्ध उक्तः किन्त्वयमेवेन्द्रियसम्बन्धोऽपि स्यात् । तत्र इई इत्यनयोश्चक्षुषा सम्बन्धः । उऊ इति श्रोत्रेण । ऋ ॠ इति घ्राणेन । विसर्गस्य रसेन । एतेषां सर्वेषां त्वगिन्द्रियेण सम्बन्धः । तस्य व्यापित्वात् बहुवर्णसम्बन्धसंभवः । वर्णानामेवेन्द्रियसम्बन्धात् तद्द्वारा सकलार्थसम्बन्धोऽपि स्यात् । ततश्च तथाविधैर्लिपिवर्णैः स्वसंबन्धात्तदिन्द्रियगोचरं सदूरे भवमितरदपि सर्वं वस्तु ब्रह्माग्नौ जुहुयादिति सम्बध्यते । प्रदर्शनार्थं चैतदुक्तम् । यत्तावदयानया पञ्चविभेदभिन्नयेति वर्णानां पञ्चभूतरूपत्वं तेषां प्रत्येकं स्थूलसूक्ष्मादिरूपत्वं चोक्तम् तदेव प्रतिपत्तव्यम् । यद्वाध्यात्मिकाधिदैवतविग्रहयोरैक्यतया काननवृत्तादिस्थानामेवापरिमितत्वं प्रतिपत्तव्यमिति सोऽग्निरपि व्याप्त एव । तस्य सुखसाध्यमेतद्धोमादिकरणत्वेनाभिप्रेतमित्यभिप्रायेण विशेषणमुक्तम् ।

अतर्क्येति । अतर्क्याशेषलोकशब्देन तत्तदिन्द्रियगोचरस्यैव ग्रहणम् । यावान् अतुं शक्योऽशेषो लोकस्तावानेवायं तत्तदिन्द्रियगोचरोऽर्थो भवतीति तदभिप्रायः । यदैश्वरं तेजस्तस्मिन् ब्रह्माग्नाविति सम्बन्धः । देवतैवेश्वरस्तदीयं चित्स्वरूपं स्वरूपमेव च तेजः । यदुक्तं—स्वर्गाकाशव्याप्तता धामगाश्चेति । सदा सर्वत्र वर्तिनीति कालदेशाभ्यां तस्यानवच्छिन्नत्वमुक्तम् । यदुक्तं—स इति परिततं परन्तु तेज इति ।

अभिप्रायान्तरं दर्शयति—एवं समन्त्रकमित्यादिना । विदुषामयत्नसाध्यमिति । मन्त्रन्यासजपयोगादिभिर्विदितदेवतात्मतत्त्वादिविदांशः । अनेन तैरप्येवमयत्नस्यैव यत्नेनानुसन्धेयमनुष्ठानावशिष्टकालेष्वित्यपि सूचितम् । मूले पञ्चज्ञानेन्द्रियावद्धा इत्यस्यायमर्थः । श्रोत्रादीन्द्रियगोचर एवायं विश्वः प्रपञ्चः स च वैखरीवाच्य इति सर्वेऽपि लिपिवर्णाः प्रपञ्चवदिन्द्रियसम्बद्धा इति । यद्वानाहतशिवादिविषयान्ततया वर्णसम्बन्धोऽत्र विवक्ष्यते । तदाह—वाचकवर्गस्येति । वाच्यवाचकभेदेन वर्गद्वयमिहाभिप्रेतम् । वाच्यस्यापीति । वर्गस्येत्यनुषङ्गः । स च तत्त्वगणरूप इति तत्त्वगणस्येत्युक्तम् । तदितीन्द्रियसम्बन्धमिति भावः । त्विति विशेषार्थः । समुच्चयार्थो वा । यत्र शब्दस्तया चैतत्सम्पत इति भावः । तत्तदिन्द्रियगोचरमिति

श्रूयमाणमस्पृश्यमानादिलक्षणम् । ततः प्रपञ्चमिति मूलार्थः । आरात्तनं सर्वमिति तद्विशेषणम् । तद्व्याचष्टे—दूरात्तनमिति । दूरभवमिति तदर्थः । दूरग्रहणमन्तिकोपलक्षणमाराच्छब्दस्योभयार्थत्वादिति दर्शयंस्तद्विभागमपि दर्शयति—दूरमन्तिकं चेति । दूरमधिदैवतमन्तिकमध्यात्ममिति च द्रष्टव्यम् । श्रोत्रादिभिरुभयथाऽप्यर्थग्रहणादेवमुक्तम् । घटादिविषयदर्शनसमय इति प्रचुरसंभवादेतदुपादानम् । श्रवणादिसमयेऽप्येतत् सर्वमिष्यत एव । तत्त्वगणस्येति वर्णविशिष्टस्येति च द्रष्टव्यम् । ननु कथं तस्मादुत्पत्तिः कथं वा लय इति । तत्राहतशिवतत्त्वमिति स्वयमवाच्यमवाचकं ब्रह्मेति यदुक्तं तदनाहतशिवतत्त्वमित्यवबोद्धव्यम् । तदुक्तमधस्तात्—अधिष्ठानसाक्षिलक्षणावनाहतशिवशक्ती अकारलक्षितार्थाविति । प्रमातेत्यनाहतदशायां न प्रमातृत्वमपीति भावः । तदप्युक्तं—विश्वं प्रमेयप्रमाणप्रमातृरूपात्मविद्याशिवतत्त्वरूपमिति । प्रमातृप्रमाणादिक्रमप्रतिपत्त्यर्थं च प्रमातृग्रहणम् । तद्विभागश्च तत्रैवोक्तः—तत्र मायान्तं मेयरूपमात्मतत्त्वं सदाशिवान्तं मानरूपं विद्यातत्त्वमाहतशिवान्तं प्रमातृरूपं शिवतत्त्वमिति । अकारवाच्यार्थ इति तत्त्वप्रसरक्रमेण सह तदविभक्ततद्वाचकवर्णप्रसरक्रमोऽपि सूचितः । तेन सदाशिवादीनामिकारादिवर्णयोगोऽपि लभ्यते । तदुक्तं—इह सवाचकानि सदाशिवेश्वरशुद्धविद्यातत्त्वानीत्यादि । ननु तत्रैव तावत्तत्त्वानां रूपं सिद्धान्ततः किमिह तदभिधानेनेति । नैष दोषः । + + + । परिणामिन्यपरशक्तिरिति धर्म्यभिप्रायः । परशक्तिरनाहतं वस्त्वित्यवरग्रहणम् । परिणामसामर्थ्यमिति धर्माभिप्रायम् । सकारतदर्थरूपिण्येति वाच्यवाचकाविभागाभिप्रायम् । विमर्शप्रकाशाभ्यां वेति + + + वेति । तत्तद्विक्षेप इति । मत्तः परिणममानार्थतया विक्षेप इत्यर्थः । अन्याच्छादन इत्यनुवर्तमानस्य चिद्रूपाच्छादन इत्यर्थः । विषयसमस्येषा । अवस्थितमिति चान्वयः । एतदुत्तरत्रापि समानम् । सर्वविषयेष्वित्यवस्थितं प्रसिद्धमेवेत्यनुपङ्गेण सम्बन्धनीयम् । तत्तदवस्थितिव्यपगमेन विलयक्रमोऽप्यूहनीय इति ॥ ४८ ॥ ४९ ॥

मूले सद्यात्मभिरिति प्रपञ्चयाग एव सूक्ष्मा प्रतिपत्तिरुक्ता । मन्त्रकर्वगिन्द्रियेषु ब्रह्मतया प्रतिपत्तिरियं भवति । मन्त्राणामर्थतोऽपि सद्यस्त्वात्सद्यामन्त्रैरित्युक्तम् । तदुक्तं—स्रेति स्वर्ग इत्यादि । ब्रह्मविद्भिरिति । देवतातत्त्वं ब्रह्म तदेवात्मानं विद्वद्भिरित्यर्थः । ब्रह्मार्पणमिति भाषादिवेति शेषः । अभिप्रायान्तरमाह—यमन्यत इति । सर्वेषां वस्तुतो ब्रह्मरूपत्वादिति भावः ॥ ५० ॥

मूले एवं सर्वमिदमित्यमिति प्रपञ्चयागोपसंहारेणाभिमतमन्त्रजपाद्यधिकारी

दर्शितः। वर्णविभेदभिन्नमिति। यदुक्तं—मातृकान्यासवत् प्राग्वै लिपिनेत्यादि। बाल्याद्यवस्थायोगाद्देहस्याष्टढत्वम्। मांसान्वमज्जाद्युतमिति जुगुप्सितत्वमुक्तम्। तत्तदिन्द्रियेभ्यो ज्ञानक्रियाप्रसरणात् चरत्वम्। अनेन होमद्वारा देहस्य तद्विपरीतं ब्रह्मात्मनि विलायनमुचितमित्युक्तम्। सुविशदत्वं निर्मलत्वम्। विमलधीरिति + + +। तेजःस्वरूपो स्वयं भूत्वेति। तद् ब्रह्मैवेह तेजः। सर्वमन्त्रं जपेदिति प्रपञ्चयागानन्तरं तदङ्गर्थ्यादि विन्यस्याभिमतमन्त्रोदयाद्यारभ्यव्यम्।

अभिप्रायभेदमाह—एवमित्यादिना। तेजःशब्देनेह कलानां ग्रहणम्। तदाह —सकलीकरणन्यासेनेति। परतेजसीति। तदुदरभाग इति भावः। ताभ्यामेव सुषुम्नामिति। सुषुम्नाकारेण न्यासोऽभिप्रेतः। कारणशक्तिकसकलीकृतजीवामिति। सुषुम्नान्तर्गतं मूलाधार एवैतद्भवति। ताभ्यामेव वर्णात्मकमिति। व्यापकेनेत्यवयोद्धव्यम्। तावद्दलानीति दशद्वादशषोडशदलानि। न्यासेनेयं चिन्ता स्यात्। व्यापककलाय धूम्रार्चिषे नम इत्याद्याः। पादयोर्न्यसिलेति। तथतुःसन्ध्यग्रेष्विति भावः। एवं हस्तयोरित्यत्रापि द्रष्टव्यम्। गलास्यनेत्रादिष्विति मूर्धग्रहणम्। विसर्गाद्यकारान्तस्थानेष्विति। मुखे कामनवृत्तेत्येतदैलोम्येनेत्यर्थः। शक्तियान्तकलान्यासस्तु विकल्प्यत इत्यर्थादवसीयते। मूलाधारे त्रिकोणकोणेषु शक्तिकलान्यासः। मूर्धनि द्विदलपद्मे शान्तकलान्यासः। प्राणप्रतिष्ठा चोभयविधा कार्येति। जीवकलानामिति जीवस्योपलक्षणम्। तासामिति परस्योपलक्षणम्। पाशाङ्कुशवरचरेति। न कलास्वेवैतद्योगोऽपि तु जलसमष्टिप्राणप्रतिष्ठासु वा कलास्वपीति ज्ञेयम्। मातृकां न्यसितेति। यदादावेव ह्रतं समुनिच्छन्दोदैवतमित्यादि तस्यैवानुसन्धानार्थमेतत्। तेन तदङ्गर्थ्यादिन्यासो गणपतेरङ्गर्थ्यादिन्यासोऽपि स्यात्॥ ५१॥

प्राणाग्निहोत्रप्रपञ्चयागयोस्तत्त्वेनेति स्वतन्त्रयोरभिमतमन्त्रप्रेष्यभूतयोरप्येतत् संभवति। नन्वभिधायेति तत्त्वे तदभिहितमिति। उच्यते। सशक्तिकमलामारन्यासादीनां तावदयानया पञ्चविभेदभिन्नयेत्यत्राभिधानम्। शक्तादीनां त्वत्र हितविधये विदुषामित्यत्र। यद्यप्येतद्भाष्येव किन्तु तस्यायोह गतत्वेनाभिमान इत्यभिधायेत्युक्तमिति बोद्धव्यम्। स्वातन्त्र्येणापीति। ननु स्वातन्त्र्येण फलसम्बन्धोऽपि तावदुक्त एव। यथा—विन्यासैरथ सञ्जपैरित्यादि। केशवादियोगे श्रीबीजयोगे च श्रीरेव फलमित्यादीति। नैष दोषः। तत्र तत्तदर्थिनां तत्तद्ध्यानजपादिकमभिप्रेतमिह तु फलविशेषार्थिनां दशविधन्यास इति भेदः। केशवाद्य इति केशवादियुतः। शक्तिकमलामारैरेति युतशब्दोऽनुवर्तते। कमला श्रीबीजम्। मारः कामबीजम्। एकैकश इति तेषां पृथगपि योग उक्तः। वाकारो विकल्पार्थः। सविसर्गः सबिन्दु-

सर्गो मारकमलाशक्तियुतयेत्येषां योगः। तेषां पृथग्योगो न ग्राह्य इत्येवं वा दशधा न्यास इति भावः। पृथङ्निगदिता इति। न प्राणाग्निहोत्रप्रपञ्चसहितता किन्तु स्वतन्त्रतयेति भावः। न्यास एवैवं स्यात्। प्रबन्धेन चैषामावृत्तिरिति ज्ञेयम् ॥५२॥

मूले तेजःस्वरूपो स्वयं भूत्वेति प्रपञ्चयागस्याभिमतमन्त्रविशेषतया प्रयोग उक्तः। स्वतन्त्रतया प्रयोगः प्रपञ्चयागस्त्विल्युच्यते। तदाह—समन्त्रकप्रपञ्चयागस्येति। विशेषत इति शुद्धादिन्यासादितोऽभिमतमन्त्रतोऽप्यतिशय उक्तः। मूलेऽपि यत् प्रपञ्चस्य यापको विनाशकः संसारविशेषस्य सम्पद्रूपस्य यापको नेता परस्य चार्थस्य परो निवेदक इति योजनीयम्। परोऽर्थो मोक्ष एव। प्रकारान्तरेण विवृणोति—विपत्प्रपञ्चयापनमिति। मोक्षापेक्षया विपत्प्रपञ्चो बन्धक + + + तत्कार्यप्रपञ्चः। परस्येत्यर्थः। अमन्त्रकप्रपञ्चयागपरतया विवृणोति—अमन्त्रकप्रपञ्चयागस्येति। वर्णैः प्रपञ्चयागस्तावदेवमुक्तः। अथ द्रव्यैः प्रपञ्चयाग उच्यते—द्रव्यैर्वेति। तानीति द्रव्याणि। तथैवेति तत्प्रकारः॥ ५३॥५४॥

पञ्चपटलोक्तक्रमेणेति। ताराद्यैर्दशभिर्मन्त्रैरित्याद्युक्तक्रमेणेत्यर्थः। मातृकाविधानेनाग्निजननं पूजा च। तदुक्तं—हुताशनाविधौ मातृकोक्ताविति। तत्र कलायुग्मयथाष्टवर्गानित्यावरणद्वये प्रतिवर्णसाक्षाट्टाक्षरयोगो विशेषः। मन्त्रितम इत्येभिस्तृतीयलिपिभिरित्येतद्विहानित्यर्थः। अभिप्रायान्तरमाह—बीजेनेति। जुहुयाच्च चतुर्वारमित्यतोऽर्वागेतदर्थादवसीयते। संख्या तु सचतुश्चत्वारिंशद्वारमित्युक्तैव। यद्वा विद्यान्तिकमिति साध्यमन्त्रस्य पीठपूजादिकं कृत्वेत्यादि मूलेन पञ्चविंशतिसंख्यं हुत्वेत्यतो यदुक्तं तत् सर्वं कृत्वा ततो गणपतिमन्त्रेण चतुर्वारं होमोऽयमभिप्रेतः। ततः पूर्वमयं बीजेन कृत्वा च होमो भवति। पयाविभूतिमन्त्रेणापि सद्धोमः स्यादिति। मूल एकाहस्येति मातृकाहस्यभिप्रायम्॥ ५५॥ ५६॥

नियुताधिकलक्षसंख्यमिति। नियुतं विंशतिसहस्रम्। लक्षसंख्यमित्येव वा पाठः। मन्त्रीत्यनुवादः। अभिप्रायान्तरमाह—सिद्धिकामस्येति। स त्वैहिकीं सकलसिद्धिमवाप्येत्येतदभिप्रायमेतत्। वाञ्छायोग्यामिति। पुत्राद्यभिमतविशेषप्रधानामिति भावः। मुक्तिकामस्येति। परतरं च परत्र यातीत्येतदभिप्रायम्। सिद्धिपदमनुपश्यते। प्रणवादित्वं सर्वमन्त्रेषु नित्यमिति तत्पुटनमुक्तम्। मातृकावृत्तिभिरिह सर्वत्र लक्षादिसंख्या भवतीत्यवबोद्धव्यम्॥ ५७॥

एकादिकेति पक्षगतादपि ग्राह्यमेव। अभिवृत्तिरावृत्तिः। विकृतिमिति क्षुद्रग्रहादिकारितामिति शेषः। प्रकोप इति शरीरेन्द्रियादिविक्रियावेगः॥ ५८॥

द्वादशसहस्रमथवेति पूर्वोक्तशेषः एव। तदाह—होमविधिमिति॥ ५९॥

अथयाप्रतिपत्ति प्रजपादिति। तत्तद्विहिता प्रतिपत्तिर्यथाप्रतिपत्तिः। न तथेत्ययथाप्रतिपत्तीति क्रियाविशेषणं चैतत्। सहस्रत्रव्येति सहस्राढ्व्येत्यर्थः। वसुशब्दो द्रव्यवचनः। रात्रौ तिलहोमयेति + + + नृसिंहयोगयेति सूचित इत्यनुवर्तते। सविस्मृतीयेति दुर्दैवतादिकारिता इति शेषः। सापस्मृतिरित्यपस्मृतिरपस्मारः। शापभवानिति गुर्वादिकोपकृताः शापाः। मूले यो मन्त्रीत्यनुवादः। अभिप्रायान्तरमाह—मन्त्रीति। सूचित इत्यनुवर्तत एव। मूले महद्दवेरिति। महत्या ऋद्धेरित्यर्थः। लक्षं तदर्धकं वेत्यत्र + + + ॥ ६०—६३॥

सद्रव्यैरिति सद्भिर्द्रव्यैरित्ययमनुवादः। अभिप्रायान्तरमाह—सद्रव्यैरितीति। समुचितद्रव्यविशेषसहितैरेभिरित्यर्थः। तत्तत्कर्मयोग्येति। यथा + + + कार्येत्यत्र व्यञ्जनशिथिलोच्चारणेन मात्रापूरणमित्यवबोद्धव्यम्। योग्यपरिमाणमिति संख्याभिप्रायम्। जुहुयादिति च संबन्धः॥ ६४॥६५॥

मूले मितधीरिति महद्दवधानमुक्तम्। न्यासीत्क्रमत इति तत्तत्स्थाने भङ्गाभङ्गेति भावः। मंक्षिति चिप्रमित्यर्थः। विधिना तेनैव लोपेन वेति। समरात्रं त्रिमधुरात्तया लवणयुक्तया वेत्यर्थः॥ ६६॥

पञ्चाग्रदोषधिविपाचितेति। जनिते कुण्डाग्नौ घटे पञ्चगव्यं योजयित्वा तत्र वर्णौषधीर्निक्षिप्य यावत्तच्चिरमग्निरुत्पद्यते तावत्तत् पाचयेत्। तस्मिन्नग्नौ होमः। तदापि पूजादिसर्वं कर्तव्यमेव। तथावहन्न संपद्यते तावत्तूष्णीमवस्थाय तस्मिन् भस्मनि विधिनाभिसमर्चनं जपश्च भवति। जपोऽप्यस्यैव मन्त्रस्येति ज्ञेयम्। विधिनेत्येतत् सूचितम्। वर्णौषधीनां तत्तद्वर्णेन संपूज्य जपः कार्यः। फलविशेषापेक्षायान्तु तस्मिन् भस्मनि तदनुरूपमन्त्रस्य यन्त्रविलेखनं पूजा तस्यैवायुतजपोऽपि कार्यं इति॥ ६७॥

मूल एकादशार्धकर्षिकेत्येकं पदम्। सार्धैकादशकर्षिकामित्यर्थः। अभिप्रायान्तरमाह—एकेति। दशार्धशब्देन सार्धदशग्रहणम्। दशार्धकर्षिकां दद्यात्। सैका दक्षिणेत्येवं योजनीयम्। अर्धेऽर्धपञ्चकर्षिकेति। सार्धपञ्चग्रहणम्। द्विकर्षा च सार्धेति। सार्धद्विकर्षिकेत्यर्थः। निर्जितमिति द्रव्यप्रपञ्चयागोपसंहारः। तथा प्रपञ्चयागादपि करप्रचेया इति सम्बन्धः। प्रचयनमुपार्जनम्। यथा करेण उद्यानगतात् फलान्युपार्ज्यन्ते तद्दितोऽपीति भावः। प्रभूतलभयमनल्पत्वं धनेनोक्तम्॥ ६८॥ ७०॥

इति प्रयोगक्रमदीपिकायां सप्तमः पटलः।

## अथ अष्टमः पटलः ।

लिपिरेव पटलद्वयेऽपि प्रतिपाद्या। अत इह प्रकरणसंगतिरेव वक्तव्ये-त्यभिप्रायेणाह—प्रपञ्चयागादिति। क्रमगोपनार्थमिति। परमरहस्यत्वादनयो-रिति भावः। मूलगतायशब्दार्थोऽप्यनन्तरमित्युक्तम्। मूले विदुषां हितविधय इति। स्वेति स्वर्गं इत्याद्युक्तविदामित्यर्थः। अभिप्रायान्तरमाह—एवेति। मूले बद्ध्वा पद्मासनमिति तदुचिततया विशेषत आसनमुक्तम्। यद्वा स्वतन्त्रप्राणाग्नि-होत्रापेक्षमेतत्। स्वासनपूजनमिति + + + ॥ १ ॥

मूले शक्तेः सत्त्वनिबद्धमध्यमित्यग्निहोत्रानुसन्धानमुक्तम्। शक्तिः हृल्लेखा। तस्याः सत्त्वं हकारः। तेन निबद्धं संबद्धं मध्यं यस्य तत्तथोक्तम्। मूलाधारमित्यनेन सम्बन्धः। तस्या एव माया ईकारः स तमोरूपः रजो रेफरूपं ताभ्यां परितो वेष्टितम्। प्राग्वदोनिलदिक्षु गतास्त्रिकोणस्याग्रयो यत्र तत्तथोक्तम्। त्रिकोणमध्ये हकारः। त्रिकोणवह्निर्मायारजोवेष्टनं तदन्तरेव वा। जठरं मध्य इति जठरस्य मध्य इत्यर्थः। तदभिप्रायमाह—अशनकाल इति। वक्ष्यति च—प्रतिदिनममुना भजतामित्यादि। योगकाल इति प्राणाग्निहोत्रहुताभिप्रायम्। नाभेरित्यत्र निष्कर्ष-माह नाभिलिङ्गमिति। लक्षणयेति भावः। त्रिकोणान्तर्भागे शक्तेर्बिन्दुस्तदन्तरेव कुण्डानीति ज्ञेयम्। तदुक्तं—मूलाधारत्रिकोणाग्निबिन्दुमध्येत्यादि। कुण्डैरित्युप-लक्षितमिति शेषः। अनारतमित्याहोमान्तमित्यर्थः। अभिप्रायान्तरमाह—मने-नेति। क्रियादिशक्त्यात्मनेति पञ्चतत्त्वात्मनो ग्रहणार्थमेतत्। क्रियाभेदा एव हि पञ्च वृत्तयः। आदिशब्देन ज्ञानेच्छादिग्रहणम्। तदुक्तमधस्तात्—ज्ञानक्रियात्मा-त्मकः प्राण इति। प्राणानामेवात्राग्निभावः। तेषां समष्टिरेकोऽग्निरिति चाव-बोद्धव्यम्। समतत्त्वमनुतत्त्वमित्यर्थः। अभिप्रायान्तरमाह—समो जीवस्येति। मं च इत्याभ्यामुभयोर्ग्रहणमित्यर्थः। तदुक्तं—स्वेति स्वर्गः स्वेति चात्मा समुत्र इति। तयोरेकतत्त्वमेव प्राणरूपेणान्यात्मनावस्थितमित्यर्थादवधीयते। प्रपञ्चयागे हि समयोर्द्वे व्याप्ततयावस्थानमत एव लभ्यते। तयोरेकतत्त्वे हि स योगो भवति। तदुक्तं—सर्वं यतिर्न्यस्य हुत्वा ब्रह्म हुताशन इति। मूले योगीति प्राणाग्निहोत्रा-धिकार्यभिप्रायम्। मितह इति। ते रत्नैरित्यादिसकलफलाभिप्रायम् ॥ २ ॥

मूले मध्येन्द्वित्याद्यभिधानं वैदिकपक्षाग्नित्रयाणां प्रतिपत्त्यर्थम्। कुण्डनाम-कथनमित्यभिप्रायान्तरमुक्तम् ॥ ३ ॥

मूले भकलप्रमाप्रभवकादिति। मक्रनानामर्केन्द्वादिप्रमाणामुत्पत्तिस्थानभूता-दित्यर्थः। कम्पाकादिति। प्रनयकाचीनादित्यादृद्वादशान्तस्थादित्यर्थः। पाद्या-

षितां जुहुयादिति च सम्बन्धः। अमृतमयीमित्यानन्द एवामृतं भवति। चिदिवार्कोऽग्निरिति। तदाह—आनन्दमयीमिति। मूलेऽच्छामिति। निर्मलामित्यर्थः। त्विति प्रतिकुण्डं क्रमतो हुतावकाशोऽवशिष्यत इति सूचितम्। तदभिप्रायमाह—त्वितीति। कल्पान्ताग्निशिखास्फुरत्कुहरकेष्विति। मूलाधारे तावच्चिदग्निर्वर्तते। तदुक्तं—तस्याधस्तात् त्रिकोणाभमित्यादि। तस्य पञ्च शिखा एव पञ्चकुण्डोदरेषु स्फुरन्तीति भावः॥ ४॥

आद्यास्त इति वर्णहोमानन्तरं ग्रहहोम उक्तः। पञ्चानामग्नीनामेकीकरणमर्थसिद्धम्। अत्राभिप्रायान्तरमाह—नवग्रहहोममिति। अन्त्यशवर्गेति द्वितीयहोमः। त्विति तृतीयहोमः। मन्त्रीति चतुर्थहोमः। अयं पञ्चम इति ज्ञेयम्। आद्यग्रहणं प्रतिलोमप्रयोगाभिप्रायम्। पशुमेदो गोमेदः। व्यापकसमर्थसंज्ञा इति आद्यानां विशेषणम्। अभिप्रायान्तरमाह—व्यापकेत्यादिपदैरिति। स्वराख्या इत्येतदादिशब्देनोक्तम्। सुमतिरिति मन्त्रप्रयोगाभिज्ञत्वमुक्तम्। अभिप्रायान्तरमाह—परमानन्दतत्त्वविज्ञिरिति॥ ५॥६॥

मूल इत्येवमित्युपसंहारः। दिनादाविति। प्रातरित्यर्थः। शतार्धमिति। पञ्चाशद्वारमित्यर्थः। वर्णसंयोगतोऽष्टाक्षरावृत्तिरियमुक्ता। तदुक्तं—पञ्चाशन्मन्त्रैरिति। यद्वा मातृकावृत्तिरियमभिप्रेयते। स्वतन्त्रे प्राणाग्निहोत्र एव संभवतीत्यवसेयव्यम्। गुणफलमिति। प्रधानफलं तु वक्ष्यति—नित्यानन्दमयस्त्वनादिनिधन इति॥ ७॥

मूलेऽन्त्यशेति कुण्डेषु तेषु क्रमादित्युक्तस्यैव विशदीकरणम्। अभिप्रायान्तरमाह—दशभिर्दशभिरिति। अन्त्यः षकारः। वर्गान्त्या ङञणनमाः। अस्तिति विसर्गः। वामश्रवणमूकारः। अधिता लकारः। अं इत्यनुस्वारः। हलयुतेति हकारलयुतेत्यर्थः। औ इत्यौकारः। परा + + कारः। फादिपञ्चकं फयठछखाः। वर्गादिकाः पतटचकाः॥ ८॥९॥१०॥

व्योम्ना मध्यस्थितेऽग्नाविति तस्मिन्नेव वर्णहोमे प्रतिपत्तिरुच्यते। व्योम्ना शब्दमध्यस्थितेऽग्नौ हुनेदिति सम्बन्धः। तन्मात्राणां स्थूलभूतैरेव होम उच्यते। सकलजगद्धोमसिद्धिरेवं स्यादिति। प्रपञ्चयागेऽप्येवमुक्तम्—पञ्चज्ञानेन्द्रियाद्या इत्यादि। स्वेनैव रूपमित्यग्नाविति प्रकृतापेक्षम्। अग्निना सह रूपमित्यर्थः। अभिप्रायान्तरमाह—व्योम्नेत्यादिनेति। भूतमन्त्रोद्धार इति। भूतमन्त्रैर्होममित्युक्तानामित्यर्थः। कथमविरतशब्देन सामान्यमुक्तमित्याद्यविरतमिति। स्पर्शादिष्वपि समानमेतद्द्रष्टव्यम्। इह व्योम्ना शब्दमिति प्रदर्शनार्थम्। तेन तत्तद्गर्भाजामिन्द्रियादीनामपि ग्रहणं भवति। तदुक्तम्—आकाशशब्दश्रोत्रेत्यादि।

उभयरुचिरुचिरैर्ष्विति कुण्डेष्वित्यर्थाद्भवति। वह्नितुर्योति—चिदानन्दात्मकेति। चिदात्मकः कल्पाग्निः मूलाधारगतः आनन्दात्मकः कल्पार्को द्वादशान्तगतः। ननु तस्यापि चिदात्मकत्वमुक्तम्—चिद्रूपात्मकलप्रभांप्रभवकादिति। नैष दोषः। ज्योतीरुचा स्पृष्टामृतमयीमात्मनावितामित्यभिहितत्वादिति। उभयौ रुचिभौ रुचिरैर्ष्विति विग्रहः। कल्पान्ताग्नियोगेऽपि कुण्डानां कल्पार्कप्रकाशयोगादतीव परिदीप्तत्वमनेनोक्तम्। पुनरप्यभिप्रायान्तरमाह—उभयरुचिरुचिरैर्ष्विति। चिदानन्दात्मकाग्नीषोमदीप्तेष्वित्यग्नीषोममन्त्राभ्यां समस्तहोमः सूचितः। अचरौघैरिति। समस्तया मातृकयाष्टमो होम इति भावः। मूले च स्यादित्युपस्कार उत्तरपदेन चान्वयः। सर्वेषां वेदानामर्थानां प्रतिमयनं होमतो विलापनं तेन समुद्भावितोऽपरोक्षतया प्रकाशितो ब्रह्मलक्षणः प्रत्यगात्मा यस्येति समासः॥ ११॥

ससारगत्यादीति प्राणाग्निहोत्रमन्त्रोच्चारस्तदनन्तरं प्रपञ्चयागयोक्तः। प्रणवमन्त्राद्यनन्तरमित्येभिः तृतीयलिपिभिरित्युक्तमातृकाग्रहणम्। मूलमन्त्रादियोग उक्त इत्येतद्ग्रहणं च। सूक्ष्मभावाकृतिरिति। यद्वेदार्थेषु सूक्ष्मतमुगतवस्तुमात्रं चिन्मात्रं तदाकारः। नित्यतनुरिति तस्यैव विग्रहत्वान्नित्यतनुत्वं वेद्यं ह्यनित्य + तनुरिति। तदुक्तं—मांसान्नमन्त्राहृतं देहं तत् चरमिति। अनयोरभिप्रायान्तरमाह—सूक्ष्मभावाकृतिरिति + + पूर्वमेवोक्तमिति। कथमित्याह—स्वयं च घर्मेतीति। तदुक्तं—गतेर्ध्येयत्वं सूचितमिति। ध्यातस्यैव फलत्वादिति नित्यफल एव नियमादिति भावः। घर्मेनेति सूक्ष्मभावाकृतिर्नित्यतनुश्च भूयादित्येतदभिप्रायं मकलापत्तिरपि फलमेवेष्यते। अस्य शक्तित्वमिष्यत इति तत्वग्रगत्यापत्तेरभिहितत्वात्। अत एवोक्तं—परमां विभूतिकाष्ठां प्राप्त इति॥ १२॥

समुचितेति तथानुसन्धानस्य कार्यत्वादिति भावः। मूले कल्पादित्यमुख इति पदं मुग्धशब्दोऽग्रवचनः। चन्द्रार्कयोर्ग्रहतया मण्डलतया चान्तःस्फुरणं भूततत्कार्यसकलजगत्तदन्तर्गतब्रह्मादिमूर्तीनां द्वितीयहोमभाजामप्यन्तःस्फुरणं भवति। संहारोन्मुखतया संक्रियमाणया वेतद्विवक्ष्यते। कल्पादित्यमुखादिरूपत्वेऽपि तस्य कल्पितत्वादमुखमु तदभावादव्यक्तत्वं लिपिसमष्टित्वादनश्वरत्वाचाधारत्वम्। तेजोदयोद्यत्प्रभ इति + + + नित्यानन्दमयस्त्विति तत्राप्यन्तररूपमुक्तम्। यः स्यात् स हंसात्मक इति। हंसशब्देन हंसः सोऽहमर्थरूपं देवतातत्त्वं मुख्योच्यते। य एवमनुसन्धानदृढतया स्यात् स हंसस्वरूपो भवतीत्यर्थः। अथ स्नानादं दर्शयति—विप्रादिक इत्यन्तेनेति॥ १३॥

मूले प्रतुदिनमिति। प्राणाग्निहोत्रान्तरारम्भः। तत्राभिप्रायभेदमप्याह—

उन्नेति। अस्ति ह्यशनकालेऽपि प्राणाग्निहोत्रम् तन्नोक्तप्राणाग्निहोत्रयोगिनामेवाधिकारोऽप्यनेनोक्त इत्यर्थः। अनुदिनममुना विधिना देवतां भजतामिति सोपस्कारमन्वयः। प्राणाद्याः स्रुगिति। प्राणापानादय एव गार्हपत्याद्यग्नयो भावनीया इत्यर्थः। केचन मन्त्रा इति। यथाग्नं प्राणमग्नमपानमाहुरित्यादि। यद्यपि मूलविवरणपूर्वकं प्रयोगक्रमो वक्तव्यः किन्तु प्रयोगक्रमे प्रतिपाद्यमाने मूलोऽर्थोऽपि स्फुटो भवेत्। न विवरणापेक्षेत्यभिप्रयन्नाह—अयमत्रेति। स्वेष्टदेवतेत्युपस्थितेऽग्रने पादप्रक्षालनमन्त्राचमनपूर्वकमेतद्भवति। लिपिन्यासस्तु प्रागुक्त एव—भोजनकाले समस्तस्येत्यादि। इत्यारभ्येति। यथा—श्रद्धायामपाने निविष्टोऽमृतं जुहोमीत्यादि। दक्षिणोत्तरेति पद्ममध्येणापि मध्यकुण्ड उज्ज्वलनम्। सप्रणव इति स्वाभीष्टमन्त्रस्यापि यन्त्रलिपिपद्मकर्णिकायां कल्पनीयम्। परिषिच्योपस्पृश्येति स्वकल्पोक्तरीत्येति भावः। ओमन्तर्मश्चेत्यारभ्याचमनमन्त्रः। ॐ गार्हपत्ये प्राण इति। मूले तु गच्छत्वित्यन्ते यदन्ते स्वाहाकारोऽभिहितः। मन्त्रविदामित्यनेन तु मन्त्रशेषोऽपि सूचितः। नारायणेत्यत्र स्वाभीष्टदेवताख्या चतुर्थ्यन्ता प्रयोक्तव्या।

मूले पञ्चाग्नीनित्यादिना पञ्चाग्नीनामेकीभाव उक्तः। ततः पञ्चाग्नीन् संयुक्तदीधितः स्मरेदित्यन्वयः। तदर्थोऽग्नीनेकीकृत्योक्तः। मूले गार्हपत्यादिकमिति पञ्चानामग्नीनां प्राणानां च समासेनोच्चारणम्। ततो ह्विरण्यादिसमासपूर्वं वर्णमन्त्रोच्चारणम्। शुचयः पावका अग्नीनित्याद्युपचर्येत्यन्तमुच्चारणं चोक्तम्।

मन्त्रं सर्वमनुक्रम्येति ऊर्ध्वादिसा[स्वाहा ?]न्तोच्चारणमुक्तम्। जिह्वाः संस्मृत्येति तासामनुसन्धानमुक्तम्। बहुरूपां तु सहस्त्येति पञ्चप्रधानजिह्वानुसन्धेयोक्ता इत्येवंविधानेन हुत्वापूर्णं तूर्ष्णीं हुत्वेति योजनीयम्। मूले पद्माद्यन्ते स्वाहाकारः प्रकरणसिद्ध एवेति ज्ञेयम्। आपूर्णमिति पूर्णान्तमीषत् पूर्णमिति वार्थः।

उपस्पृश्य विधानत इत्येतदर्थमाह—गण्डूषादिकमिति। हृष्टिरसीत्यादि सर्वं मन्त्रविदामिति सूचितमेव। उद्वयं चित्रमित्यादिनेति। उद्वयं तमसस्परीत्यादिना चित्रं देवानामुदगादित्यादिना च ऋङ्मन्त्रेणेत्यर्थः। मूल आरभ्येत्यस्यायमर्थः। तमग्निमात्मानं स्वमूलाधारगतमपि तत आरभ्यामस्तकमाद्वादशान्तं सूक्ष्मसुवाकारेणानुस्मरेदिति। अत्राभिप्रायभेदमाह—अथ प्रणवेनेति। मूलादारभ्येति द्वादशान्तस्थेन्दुमण्डलान्तर्मूलाधाराग्नेः सूक्ष्मशिखारूपेणोद्गमनमुक्तम् ॥१४—२१

चैतन्यसर्वक्रममित्यनेन तस्य व्याप्ततयानुसन्धानमुक्तम्। चैतन्यसंश्लिमममुना मस्तकमुद्गतमपि व्याप्तदिशाग्नभुवनात्मकमुक्तहोमतर्पितमनुस्मरेदित्यर्थः। प्रकृतिस्थमिति प्रकृतावस्थानाद्धि प्राणादिभावोपपत्तिरिति भावः। आद्यमिति साक्षात्

देवतातत्त्वमेवेति भावः। अनन्यमित्यनारोपितरूपम्। पञ्चाननेति पञ्चाननानि कुण्डानि। तेष्वग्नय एव रसना जिह्वास्तासु दत्तेन प्रकृतमयतया शुद्धेन सात्वाख्येन तदुचितहविषा तथा भुक्तेन स्वरूपानन्दपर्यन्तं व्याप्तिमुपगतेन तर्पितमिति व्याख्येयम्। केन तर्पितमिति। साधकेनेत्यर्थाद्गम्यते। अतर्कितमिति। तर्कयितुमशक्यम्। युक्तिभिरपरिच्छेद्यमित्यर्थः। आत्मरूपं चेत्त्वमिति। हंसः सोऽहमर्थभूतमित्यर्थप्रतिपत्तिमात्रमत्रोक्तम्। प्रकृतिस्थमिति। तत्र सोमेऽग्रेणावेशनम्। पञ्चाननाग्नीति पदेन तस्याग्नेः तच्छिखाद्वारतां प्रकृत्यवस्थामुपगतस्यामृततयास्त्रावणं तेन तस्याग्नेः सन्तर्पणं चोक्तम्। व्याप्तहिमसेति पदेन तस्य तदमृतसंपर्कतो वर्धमानस्य व्याप्तिरप्युक्ता। प्रणवो मन्त्रस्तु मन्त्रविदामित्येव सिध्येदिति चैतन्मसंसक्तमसुमिति श्लोकेन सह सम्बन्ध इत्यारभ्येत्यादिनेत्येवमुक्तम् ॥ २२ ॥

सञ्चिन्त्येति पदस्यार्थं दर्शयति—मातृकयापीति। यस्तद्वविस्तस्मिन् चैतन्ये हुतं तमेवं तर्पयद्भवेत् तत् पुनरमृतरूपायामचरायां मतार्धमयेनाप्यमावर्जितं सिध्येदिति व्याख्येयम्। मूलादारभ्येत्याद्युक्तावस्थयैव द्वादशान्तां मातृकया तद्वर्णरूपेणामृतास्त्रावणमेतदभिप्रेतमिति विवरणाशयः। तैर्जहवित्यक्षरैरपि वक्तः। प्रयोगान्तरमाह—तत इति। मूले जुहवेत्यत्रोपसंहरेदित्यध्याहार्यम्। अकुटिलान्ताराधिः भोज्यानि नित्यं भजन्नित्यनेन संबन्धः। सव्यशरीरमन्तराधिरित्युच्यते। सोऽकुटिल ऋजुर्यस्येति समासः। भोजनोचिततयासनमनेनोक्तम्। सन्दीप्तपञ्चानल इत्यग्नीनां मुख्यया लौकिकी सन्दीप्तिरुक्ता भोजनोचिततयावस्थानेनोक्ता। सायं प्रातरिति। नक्तं दिवा चेत्यर्थः। प्राणी न प्रमदोदरं प्रविशतीति। य एवमुभयविधं प्राणाग्निहोत्रं नियमेनानुतिष्ठति स पुनः प्राणी सन् स्त्रिया उदरं गर्भतया न प्रविशति। पुनरावृत्तिहीनां विविमेव प्रपद्यत इति मूलार्थः ॥ २३ ॥

मूल इति तथेति मातृकोपसंहारः। विरिञ्चेत्यामन्त्रणम्। तदाह—शार्ङ्गी ब्रह्माणं प्रत्याहेति। मूले शास्त्रादीत्यागमकाव्यादिग्रहणम्। तैरुपहिताः सर्वे विकारास्तदाचार्यास्तेषां सङ्घः समूहो वाचकवाच्यप्रपञ्चः। तस्य माता जननी मूलप्रकृतिः। विश्वस्थितिलयसर्गकरोति + + + ॥ २४ ॥

मूल इति जगदनुपत्नामित्युक्तानुष्ठानोपसंहारः। तामिमां वर्णमालामित्युक्तप्रकारेण न्यसेदिति योजनीयम्। बहुवचनं त्रिमूर्त्यभिप्रायम्। तदाह—सर्वान् प्रत्याहेति। शार्ङ्गीत्यनुषङ्गः। जगदनुषङ्गो व्याप्तिः। यदुक्तं—सषडङ्गवेदशास्त्राद्युपहितेति। अथोमयात्मका वर्णाः स्युरित्यादि च ॥ २५ ॥

वर्णमालाग्रहणाशय इतीरितेत्युक्तम्। इतीरितार्णमालिका क्रमोत्क्रमक्रम-

गुणिता मनुप्रतिपुटिता मन्त्रिणामभीष्टसाधनविषयेऽक्षमालिका भवेदिति योजना। क्रमोत्क्रमाभ्यां क्रमेण गुणितेति। गुणनमिह द्विरावर्तनम्। तत् प्रथमं क्रमात् पुनरुत्क्रमाच्च क्रमेण भवेदिति भावः। मनुप्रतिपुटितेति प्रत्यक्षरं मन्त्रेणाभिमतेन प्रतिपुटनञ्च कर्तव्यम्। प्रतिपुटनं चैतद्वर्णद्वयापेक्षया सकृत्प्रयोगरूपमेव न प्रतिवर्णापेक्षया द्विःप्रयोगरूपमिति ज्ञेयम्। यथा मन्त्राकारो मन्त्र इकार इत्यादि।

अत्र विशेषमुपदिशति—अक्षमालाया इति। मेरुत्वेनेत्यक्षरमालानां मह्दक्षं मध्ये न्यस्यते। स मेरुरित्युच्यते। मन्त्रसंयोग इति। तत्प्रतिपुटनाभिप्रायेणेति भावः। मन्त्रिणामित्यभिमन्त्रजापिनामित्यर्थः। अभीष्टसाधनविषय इति। शीघ्रसिद्धय इति भावः। इह लिपिवर्णाः शतं संपद्यन्ते। तदन्वयेन मन्त्रस्यैकशतमावृत्तिः स्यादेवमक्षरमालाया मन्त्रावृत्तिः कार्येति ॥ २६ ॥

मध्ये वयक्षरयोरिति। ननु मातृकाप्रकरणमुपसंहृतम्। ततः कथं तत्पटलशेषतयाऽयमारम्भ इत्याशङ्क्याह—सरस्वतीदेवत्यामिति। अवश्यं क्वचिद्वक्तव्यमेतत्। तथा चायमेव तदवसर उचित इति भावः। सदवदवाम्वाक्षराणीति दव इत्याभ्यां सहितानि दवाम्वा इत्यक्षराणीत्यर्थः। चन्द्रयुगमिति। चन्द्रहकारः तद्द्वयं स्वाहाकार इति यावत्। ऋषिमुखा इति ऋषिच्छन्दोदेवताः ॥ २७ ॥

श्रोत्रेति। श्रोत्रनयननासानां द्वयं द्वयं ग्राह्यम्। अन्धुः गुह्यम्। प्राक् सुप्तं उत्थाय देवतां ध्यात्वेत्यादि सर्वमिह योजनीयम्। चतुर्मूर्तिषु चरमायासमस्तयोगे वदेत्यादिपदयोगः स्यात्। करन्यासे प्रणवपुटितैर्दशभिर्वर्णैर्दक्षिणाङ्गुष्ठादिवामाङ्गुष्ठान्तमङ्गुलिषु न्यासः। पञ्चपदान्युभयाङ्गुष्ठादिकनिष्ठान्तन्यासः। देहन्यासे मन्त्रन्यासावसरेऽयं न्यासो भवति। सृष्टिन्यासोऽयमुक्तः। विपर्ययेण संहारः। नासादिनयनान्ता स्थितिः। ईश्वरपुरुषाष्टप्रकृतयोऽक्षरतत्त्वानि। यदाद्यष्टवर्णैर्दशाङ्गन्यासः स्वाहाकारेण तत्र तत्र व्यापकं चेति विशेषः। भूषणावरणन्यासानन्तरं संपूज्य जपः पुनर्गणितयोगादि सर्वं कर्तव्यम्। सामान्यपटलोक्ता न्यासाः सर्वत्र कार्या इति ह्युक्तम्। सर्वत्र दवाक्षरयोगो विशेष इति। स्वरपुटितैरथ हलभिरिति मातृकाङ्गान्येव अस्या अप्यङ्गानि इत्युक्तम्। मन्त्रीति सर्वज्ञादियोगः। अभिप्रायान्तरं दर्शयति—अङ्गानीति। अङ्गेषु मन्त्रयोगः सूचित इत्युपरि संबन्धः। यथा अंआखगघङ आं वदवदहृदयाय नम इत्यादि ॥ २८ ॥

मूले भवभयानां भञ्जिनीति विनियोगोऽपि सूचितः ॥ २९ ॥

अक्षरलक्षमिति। पुरश्चरणमुक्तम् ॥ ३० ॥

मातृकोक्तविधिनेति। पीठं विनियुज्येति संबन्धः। अक्षराम्बुज इति + +

+ शक्तिभिरिति मेधादि नव शक्तय उक्ताः। पीठमूर्तिमन्त्राविति। वर्णाब्जासनाय नम इति पीठमन्त्रः + + + मूर्तिमन्त्रः। मूले मनोजद्रू इति कामविवर्जितः। वनितां गौरवेण वागधिपेत्यवगच्छन्नित्यन्वयः॥ ३१॥ ३२॥ ३३॥

न्यासान्वितमिति। न्यासेऽपि सहस्रवारमिष्यते। तथान्विता अप इति तथेति सहस्रपदानुकरणार्थः। तथाशब्देन ध्यानं चोक्तम्। बालया सहेति बालायोगोऽनुलोमविलोमबालापुटितत्वं चोक्तम्। मूले हृदयद्वयस इति हृदयमात्रे। चतुरङ्गुलं को + + कमलोद्भवो ब्रह्मा॥ ३४॥ ३५॥ ३६॥ ३७॥ ३८॥

आद्यन्तप्रणवगेति मन्त्रान्तरमुक्तम्। आदिप्रणवगाया अन्तप्रणवगायाश्च शक्तेर्मध्यसंस्थिता वाग्भव ऐकारः तारशक्तिवाग्भवशक्तितारा इत्यर्थः। भुवि भजमानपारिजात इति। भूमावयं तावद्भजतामभिमतफलदतया पारिजातइत्यर्थः॥ ३९॥

नवक इति दृक्श्रुतिनासाद्वयवदनगुह्यपायूनां ग्रहणम्। दक्षिणाङ्गुष्ठादिवामाङ्गुष्ठान्ताङ्गुलिषु तलद्वये युगपच्च करन्यासः। सुषुम्नाप्रादिषु सृष्टिः पायवादिषु संहारः नासादिष्वुत्पन्ना स्थितिः। परमात्मेश्वरपुरुषाष्टप्रकृतयोऽचरतत्त्वानि पूर्ववत्पदैर्दशावृत्तिन्यासः। अङ्गानि षट्कमाद्वाचेति वाग्भवेनेत्यर्थः। अभिप्रायभेदमाह—ऐं क्रामिति। तदा च तद्युक्तेन तेनाङ्गानीत्यवगन्तव्यम्॥ ४०॥

भवितं भव्य। हरहासः शिवस्य हसितम्। सर्वेषामवदातेत्यनेन सम्बन्धः। विद्यावीणेति। दक्षिणयामाधः करयोरेतदुभयम्। विद्या ज्ञानमुद्रा वा। भव्यतमयघटाक्षस्रगिति दक्षिणयामोपरि करयोः। भवदभिमतप्राप्तय इति सकलभोगकैवल्यलक्षणं नित्यफलमुक्तम्॥ ४१॥

संयतेन्द्रियो मन्त्रीति मन्त्रश्रवणमुक्तम्। गूढमर्थमाह—बालायोग इति। वाग्भवानन्तरमितरयोर्बीजयोरपि योग इति भावः। तदा च त्रयोदशाक्षरोऽयं मन्त्रो भवति। तदा च न्यासे भ्रूयुगमध्य इति स्थानत्रयं प्रत्येतव्यम्। सितसरसिजनाभचम्पकैरिति विकल्पाभिप्रायम्॥ ४२॥

पूजायामिति पीठमन्त्रास्तु + + + ष्टिमूर्तिमन्त्रश्च मातृकोक्ता एव च लिपिपद्म एव च पूजा भवति। संस्कृता प्राकृता शक्ती भवतः।

तदुक्तम्—दक्षिणे संस्कृता पूज्या योगमुद्राकरद्वया।
मन्त्रतं नि.सरच्छब्दवदनाऽन्या च वाग्गतः॥ इति

केवलवाङ्मयरूप इति तयोर्विशेषणम्। प्रधानदेवतारूप इत्यर्थः। लिपिपद्माभिप्रायं चेतत्॥ ४३॥ ४४॥

इह वागीश्वर्या मन्त्रद्वयमुक्तम्। तयोरिति निगदित इति सदोपसंहारः। तेन

न्यासान्वितं निशितधीरित्यादि यद्दशाचार्यैः प्रयोगजातमुक्तम् तदिहापि योजनीयं भवति। सकलदुरितैः परिमुच्यत इति सम्बन्धनीयम्। परमपरमां भक्तिमित्यत्यन्त-परमामित्यर्थः। मन्त्रीति मन्त्रद्वयग्रहणार्थमुक्तम्। अभिप्रायान्तरमाह—दुरित-मोक्ष इति। प्रणवशक्तिवाग्भवानामन्यतमानन्तरं योग इष्यते। लक्ष्म्यास्तद्बीज-स्येति लक्ष्म्या लाभे श्रीबीजस्य योग इत्यर्थः। प्रदर्शनार्थं चैतत्। फलान्तरविषये तत्तदुचितबीजयोगः स्यादिति ॥ ४५ ॥

मातृकाविभेदानिति। केवला शुद्धसबिन्द्वादिभेदा भूतलिपिरित्येतत् सर्वं गृह्यते। मन्त्रद्वयं चेति वागीश्वरीमन्त्रद्वयम्। चकारस्याभिप्रायान्तरं दर्शयति—मन्त्रान्तरेष्वपीति।

तदुक्तम्—हृदयान्ते भगवति वदयुग्मं ततः।

वाग्देविषड्विजायान्तं वाग्भवाद्यं समुद्धरेत्॥ इति

षड्भिः पदैरङ्गानि।

शुभ्रां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डोज्ज्वलां

व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैः।

बिभ्राणां कमलासनां कुचनतां वाग्देवतां सुस्मितां

वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसम्पत्करीम्॥

मनुलक्षं जपस्तद्दशांशमाज्याक्ततिलैर्होमः। मातृकापद्मे दशाक्षरीवत् पूजाक्रमः। तत्प्रयोगास्तज्जप्तजलपानादभिषेकात् वर्षेणास्य मेधा भवति। तज्जप्तगन्ध-पुष्पादिधारी सभायां पूज्यते वादे विजयी जायते चेति।

वाचस्पतेऽमृते भूयः भुवः भुरिति कीर्तयेत्।

वागाद्यो रुद्रसंख्यार्णो वागाद्येस्त्वङ्गपञ्चकम्॥ इति।

आसीना कमलोदरे जपवटीं पद्मद्वयं पुस्तकं

बिभ्राणा तरुणेन्दुबद्धमकुटा शुभ्रेन्दुकुन्दप्रभा।

भावोन्मीलितलोचना कुचभराक्रान्ता भवद्भूतये

भूयाद्वागधिदेवता मुनिगणैरासेव्यमानाऽनिशम्॥

रुद्रलक्षं जपस्तद्दशांशं घृतेन च होमः। एकादशाक्षरीवत्पूजाक्रमः। पलाश-पुष्पैर्होमे परावाक्सिद्धिः। कदम्बपुष्पैर्बिल्वफलैर्वा होमे वाचः श्रीर्भवति। कुन्दनन्द्यावर्तपुष्पैर्होमे वाग्विभवो भवति।

माघोरमे स्वकल्वाद्ये कपिलाज्यं पचेत्पयः।

पिबेद्दिनादौ तन्नित्यं सर्वशास्त्रार्थविद्भवेत्॥ इति।

बिन्दुर्घोषयुतौ वह्निबिन्दुसद्योस्तुमान् स्मृतुरिति त्रयचरौ द्विरक्तैर्बीजैरङ्गानि ।

मुक्ताहारावदातां शिरसि शशिकलालङ्कृतां बाहुभिः स्वैः
व्याख्यावर्णाक्षमालामणिमयकलशं पुस्तकं चोद्वहन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहभरविनमन्मध्यदेशामधीशां
वाचामीडे चिराय त्रिभुवनविनतां पुण्डरीके निषण्णाम् ॥

त्रिलक्षं जपः तद्दशांशं पायसेन च होमः । प्राग्वत्पूजाक्रमः । जातिपद्मनन्द्यावर्तकुन्दपुष्पैश्चन्दनार्द्रैर्होमेन वाक्सिद्धिर्भवति इति । एवमन्यदपि ग्राह्यमिति । प्रतिश्लोकं वाग्भवयोग इत्यादावाद्यन्तयोरादिमध्यान्तेषु वेति बोद्धव्यम् । वाक्सूक्तादिजपो वेति । चत्वारि वाक् सपर्यरी द्वे । यद्वाग्वदन्ती द्वे । बृहस्पते प्रथममहं वद्वे + + दिति वाक्सूक्तानि । नमो वाचे या चोदितेति । वाग्यजुःसारस्वतद्क्तानामादिशब्देन ग्रहणम् । पावका नः सरस्वतीति । यस्ते स्तनः सरस्वति त्वमियमददादिति सूक्तम् । प्रचोदयेति सूक्तद्वयम् । सरस्वतीन्देवयन्तस्त्रिस्त्र इति । ध्यानमिति तत्तत्सारस्वतमन्त्रोचितसूक्तम् ॥ ४६ ॥

मूले अचलात्मजा पार्वती । कमला श्रीः । श्रोतुं वक्तुमशिक्षितोऽनेडमूकः । मूलाधारमुखं तद्गतशक्तिमुखम् । प्रभावशब्दो व्याप्तिवचनः । व्रातशब्दः समूहवचनः । योगीन्द्रैरपीति सम्बन्धः ॥ ४७—५४ ॥

अविद्यानाशनीतिच्छेदः । त्रिमुखो त + + + त्रयीस्वरूप इति । त्रयी वेदः । षडङ्गानीन्द्रियाणि चेति ज्ञेयम् । तदुक्तं—छन्दःपादौचित्यादिति । भर्ति प्रचोदेति सम्बन्धः । सकर्मकोऽयमिहेष्यते । जपार्चनाहवनवृत्तिष्विति ध्यानाद्युपलक्षणम् । देहापदीति । स्वदेहत्यजसमये नित्यशुद्धं पदं स्थानमिति । यस्मान्मजपादिशेषतयायं स्तोत्रजपस्तस्य सकलसिद्धिसाधनत्वादेवसूक्तम् ॥ ५४—६० ॥

इति प्रयोगक्रमदीपिकायामष्टमः पटलः ।

## अथ नवमः पटलः ।

एवं ज्ञानशक्तिप्रधानानिति । ज्ञानशक्तिस्तावत् सरस्वती । तदुक्तम्—समस्तबोधस्थितिदीपिकाया इति सर्वमन्त्रमयज्ञानशक्तिरूपत्वेनेति च । तस्याः स्वरूपभूता सा शक्तिः परादिक्रमेण स्थूलार्थविषयतया कार्यदशापन्नेह ज्ञानशक्तिर्विवक्षिता । तत्प्रधानानिति । यद्यप्येवं ज्ञानशक्तिरूपा एवामी मन्त्राः । यत उक्तं—ज्ञानशक्तिप्रसरात्मकानां शब्दानामिति । किञ्चिच्छाक्रियाशक्त्योरपि तेषु गुणतया सहाय इति प्रधानग्रहणम् । तेन ज्ञानशक्तावपि सरस्वत्यां तयोर्गुणतया सद्भावोऽ-

वसीयते। मातृका भूतलिपिः सबिन्द्वादिविकारा: कालादियोगिन्यः शक्त्यादियुक्ता वागीश्वर्यादय इति सर्वापेक्षं बहुवचनम्। वागीश्वर्या वदवदादियोगेऽप्यर्थाभिधानप्रधानतया ज्ञानशक्तिप्रधानत्वमिति ज्ञेयम्। मन्त्रानिति। सारस्वतानिति शेषः। यद्यप्येवं ज्ञानशक्तिप्रधानां सरस्वतीमित्येव वाच्यम्। किन्त्वेवमक्षराणामधिदेवताया इति प्रक्रमात्केवलमातृकैव स्वप्रधाना स्यादिति सर्वेषामप्यमीषां समं सामान्यमिति प्रतिपादनार्थमित्यमभिधानम्। क्रियाशक्तिप्रधानानिति सर्वं पूर्ववदेव। क्रियाशक्तिस्तावत् त्रिपुरा। वक्ष्यति च—त्रिमूर्तिसर्गाच्चेत्यादि। प्रधानग्रहणात् तस्यामिच्छाज्ञानशक्त्योः गुणतया सद्भावोऽवसीयते। हृल्लेखायामपि समानमेतत्। यतो वक्ष्यति—इच्छाशक्तिप्रधानां भुवनेशीमिति।

ततश्चैतदपि लभ्यते। एकैवोन्मनीशक्तिरिच्छाशक्तिप्रधाना भुवनेशी ज्ञानशक्तिप्रधाना सरस्वती क्रियाशक्तिप्रधाना च त्रिपुरेति। क्रियाशक्तिप्रधानानां शरादीनां सद्भावात् त्रैपुरग्रहणम्। मध्यमपञ्चकूटः शुद्धा बालेत्यादिसर्वापेक्षं बहुवचनम्। यद्यप्येवं क्रियाशक्तिप्रधानां त्रिपुरामित्येव वाच्यम्। किन्त्वेवं त्रिपुराभिधानां विद्यामिति प्रक्रमान्मध्यमपञ्चकूट एव स्वप्रधानः स्यादिति सर्वेषामपि त्रैपुराणां समं प्राधान्यमिति प्रतिपादनार्थमित्यमभिधानम्। ननु यद्येवं किं मध्यमपञ्चकूटस्य विधानं परिगृहीतमिति। उच्यते। शुद्धा मिश्रा द्विकूटेत्येवमाद्यास्त्रिपुरास्तासां मध्येवर्तिनीयं विद्या। किं च ताः समकूटा विषमकूटाश्च भवन्ति। तथा च मध्यमपञ्चकूटपरिग्रहे सर्वासामप्यासां त्रिपुराणां विधानमुपसंगृहीतं भवतीति ज्ञेयम्। ननु त्रिपुरायाः स्थितास्ति क्रियाशक्तित्वम्। तत्र कुतस्त्रिपुरायां विशेष इति। उच्यते। यत्तावदुक्तं—समस्तबोधस्थितिदीपिकाया इति। तत्र या क्रियाशक्तिः सेयं त्रिपुरा भवति। सा च विमर्शलक्षणा। तदुक्तं—संविदाख्या विमर्शशक्तिरिति। मूलार्णमर्णविज्ञातिरित्यत्र चोक्तम्—ज्ञानक्रियाशक्तिरूपेण प्रकाशविमर्शरूपेणेति। ततश्च त्रिपुरायाः सर्वमन्त्रमयविमर्शशक्तिरूपत्वेन प्राधान्याच्छ्रीत्रिपुटादिभ्यो पूर्वमभिधानं ज्ञानान्तर्गतत्वाच्च विमर्शस्य सरस्वत्याः पश्चादित्यवसेयम्। सर्वमन्त्रमयत्वाच्चेवं त्रिपुरायाः सामान्यविशेषमन्त्रत्वमपि मातृकादिवद्भवति। सर्वमन्त्रेषु हृल्लेखायाः शक्तिमात्रतया प्रवृत्तिः। तदुक्तम्—यस्य शक्तित्वमिश्वत इति चराचरस्य जगत इत्यादि च। मातृकायास्तु स्वाविभक्तार्थवाचकतया सर्वमन्त्रेषु प्रवृत्तिः। तदप्युक्तम्—त्वगादिपरमात्मान्तस्येत्यादि। स च मातृकायाः स्वार्थवचनव्यापारो विमर्शमयज्ञानलक्षण एवेति गतपटलेषु प्रस्तुतैवार्थादियं त्रिपुरा भवति। किन्तु सरस्वत्याः स्वरस्पर्शादिक्रमनियमो नैवं त्रिपुरायाः कूटाकूटादीनामेव विधाना-

दिति। किञ्च त्रिपुराशक्तिरेव शब्दब्रह्म भवति। प्रस्तुतं—स एवः स्तुतिसम्बन्धै-रित्यादि शब्दोच्चारणकाले तत्माचिन्तयेत्यादि चेति। तथा सर्वमन्त्रेषु सामान्य-तया प्रवृत्तानां हृल्लेखादीनां स्वस्वप्रधानतायां विशेषमन्त्रेति सर्वमुपपन्नमिति।

प्रस्तौतीति मूलगतायशब्दार्थोऽप्युक्तः। मूले विद्यामिति मन्त्रविशेषा-भिप्रायम्। यदुक्तं—उभार्थभाजः पिण्डबीजात्मानः पुंवाच्याध्यासिताश्च मन्त्राः संवेद्यमानस्फुटार्थरूपा मालामन्त्राः स्त्रीरूपवाच्याध्यासिताश्च विद्या इति। या त्रिभेदा इति तां विद्यामित्यधः सम्बन्धः। त्रिबीजतया त्रिप्रभेदत्वम्। तदुक्तम्—यदा त्रिधोऽय गुणयेदित्यादि। तदव्यास्यपेक्षया त्रिंशत्प्रकारत्वम्। तदप्युक्तम्—त्रिगुणा सा त्रिदोषा चेत्यादि। तथा—देवाः सस्तुतय इत्यादि। इह त्रिंशत्सङ्ख्या तु यथेच्छं सम्पादनीया। त्रिप्रधानत्वात्तु त्रिपुरायास्त्रिंशत्प्रकारत्वभिधानम्। व्याप्त-जगदात्मकत्वाज्जगत्यवासेति विशेषणम्। अभिप्रायान्तरमाह—बीजत्रयरूपेणे-त्यादिना। तद्गतबीजबिन्द्वादिभिरिति बीजबिन्दुकलानिरोधिकानादनादान्त-शक्तिव्यापिनीसमन्युन्मनीनां ग्रहणम्। तथाणां दशभिर्विभागे त्रिंशत्सङ्ख्या-सम्पत्तिः। बीजबिन्द्वादीनां जगद्व्यापित्वाज्जगत्यवासेत्येतदुपपत्तिः। यदुक्तम्—जगति सततं रुद्रसंस्थितेरिति। त्रिपुरेह मध्यमपञ्चकूटैव। तस्या बीजरूपेण बिन्दुकलाद्यवसानतया पृथगुच्चारणसंभवात् प्रकारनानात्वोपपत्तिः। यत उक्तं—योगोचित्येन बिन्द्वादियोगः सूचित इति। सर्वास्वपि त्रिपुरास्वेतत्संभवति। सर्वे-ष्वपि मन्त्रान्तरेष्वेवमुपपद्यत इति चावबोद्धव्यम्। मूले सुदुर्लभामिमिति। सुतरां दुर्लभा यस्या उपदेशसिद्धिः गूढमूर्तित्वादिति समासः।

अभिप्रायान्तरमाह—अथवेति। त्रिंशत्प्रकारविषयतयैवायं विकल्पो भवति। त्रिप्रभेदत्वं प्राग्वदेव। वक्ष्यति च—सर्वेषां त्रिबीजात्मकत्वेनेत्यादि। व्याप्तिरुच्चा-रणमिति। वाचा व्यापनमस्य विवक्षितत्वादिति भावः। केवलेति मध्यमपञ्च-कूटाया विवक्षितत्वात् सैव लक्ष्यते। स्वरान्ततयावस्थानात् केवला सा भवति। कूटस्थपृथग्गतो चेति। द्विवादिव्यञ्जनमुपर्यधोभावेन संपिण्डितं कूटो व्यपदिश्यते। कूटे मसदुच्चार्यतया वर्णानां स्थितौ स मन्त्रः कूटस्थो भवति। यथा ह्म्र्रे इति। कूट एव पृथगुच्चार्यतया वर्णानां स्थितौ स मन्त्रः पृथग्गतो भवति। यथा ह्म्रे इति। कूटस्थो दुर्वाचः पृथग्गतः सुवाच्य इत्यर्थाद्भवति। कूटाकूटपक्षयोरपीति कूटस्थ-पक्षे पृथग्गतपक्षे चेत्यर्थः। पञ्चानां षड्भिः संभेदे त्रिंशत्सङ्ख्यासम्पत्तिरिति मन्य-मान आह—पुनर्येति। आदिमादिमनादिं चेति त्रिपुरायामादिं वर्णं वाग्भवमादिं प्रथममनादिं च मध्यमोत्तमयोरन्यतरं च कुर्यादित्यर्थः। कामराजशक्तिवर्णयोश्च

तदितरस्थानयोः वृत्तिरर्थात् सिद्धा भवति। एवमितरपादद्वयमपि व्याख्येयम्। तथा च प्रतिपादं मिथो मिश्रौ द्वौ द्वौ मन्त्रौ सिध्यतः। संभूय च षट्प्रकारभेदा भवन्ति। यथा आदिमादिमनादिं चेत्यत्र तावद्वाग्भवकामराजशाक्तानि शाक्त-वाग्भवकामराजानि च। मध्यं मध्यममध्यममित्यत्र शाक्तकामराजवाग्भवानि वाग्भवशाक्तकामराजानि। अन्त्यमन्त्यमनन्त्यं चेत्यत्रापि कामराजवाग्भवशाक्तानि कामराजशाक्तवाग्भवानीति। त्रिपुरा शीघ्रसिद्धिदेति सर्वाप्येवं क्रमभेदभिन्ना त्रिपुरा शीघ्रसिद्धिदैव। न त्वेकैकोद्धारक्रमेतिन्यायेनेति केवलस्वबिन्द्वादिपञ्चसु व्यापित्वादुक्तम्। कूटपक्ष इति कूटस्थपक्षे। अकूटपक्ष इति पृथग्गतपक्षे। सर्वेषा-मिति द्विविधानामप्येषां त्रिंशन्मन्त्राणामित्यर्थः। सिद्धमिति। सुदुर्लभामिति या त्रिभेदापीति संबन्धादिति भावः। जगत्यन्नासेति तु तथा मन्त्रवित्सु प्रथित-त्वमभिप्रेतम्। मूले विशिष्टामिति प्रशंसार्थमुक्तम्।

अभिप्रायान्तरमाह—विशिष्टामितीत्यादिना। भेदपदेन विशिष्टामित्यत्र विशेषांशो विवृतः। चकारोऽध्याक्रियते। न केवलं त्रिपुराभिधानां प्रधानभूतां त्रिपु-राम् किन्तु विशिष्टां च विद्यामभिवक्ष्यामीति। विशिष्टामित्येतदुपलक्षणमिति मन्यमान इष्टाभिप्रेतामप्याहाह—अविशिष्टेति। केनापि व्यञ्जनेनासंवृत्ता त्रिष्वपि स्थानेषु केवलस्वररूपेत्यर्थः। व्योमेन्दुवक्त्राधरबिन्दुभिरित्यत्राधरादिस्वरैरियं भवति। शुद्धा बालेत्यस्यापि बालास्तीति सूचितम्। सा च गतपटले त्रैपुराणामन्यतमयोग इत्यत्रोपदिष्टा। अतएवास्याः प्राधान्यमपि गम्यते। शुद्धा षड्गेसविद्या। अन्या तु कुलसुन्दरीति भेदः। हकारादिव्यञ्जनविशिष्टेति। सैव बालेति शेषः। हका-रादिग्रहणेनैतदुक्तम्। रक्ताङ्कुकेन्द्रशिखिभिरित्यमीभिर्हसकलरैकेरैकारादिक्रमेण संयोगो विवक्षितः। स चायं व्यञ्जनसंयोगस्त्रिधा भवति। त्रिष्वपि स्वरेषु संयोगो द्वयोरपि संयोगेनैकस्मिन् प्रथमे मध्यम उत्तमे वा एकस्मिन्नेव संयोगः न द्वयोरा-द्यन्तयोराद्ययोरन्त्ययोर्वेति। तथा च सप्तधा विशिष्टा एका च शुद्धेत्यष्टौ भेदा भवन्ति। तत्र हिवरादिव्यञ्जनसंपिण्डितरूपं कूटाक्षरं व्यपदिश्यते। ततश्च शुद्धा सैकव्यञ्जना कूटस्था पृथग्गतेति चतुर्भेदसंभव इति। सभेदानामेतेषामिति भेदपदेन विशिष्टानां ग्रहणम्। ते चाविशिष्टा च संभूय बहवो मन्त्रा इति बहुवचनम्। यद्वा भेदशब्देनैकस्मिन् द्वयोस्त्रिषु वा स्वरेषु व्यञ्जनसंयोगसंभावि-नामवान्तरभेदानां ग्रहणम्। कूटाकूटत्वमिति हिवरादिसंयोगे कूटत्वमसंयोग एकसंयोगे चाकूटत्वं सिद्धमिति शेषः। विशिष्टामित्यत्र एवैतत्सिद्धिरिति बोद्ध-व्यम्। यद्वा समानमित्यनेन संबन्धनीयम्। यथोक्तम्—कूटस्थपृथग्गतौ या

सुदुर्वाचौ मन्त्राविति । यथायोगमिह कूटस्थपृथग्गतविवचेति ज्ञेयम् । सुदुर्वचत्व-मिति । यदुक्तं—सुलभा दुर्लभा चाम्निरित्यादि । सर्वेषामिति विशिष्टामित्यभि-प्रेतानामित्यर्थः । सिद्धमिति या त्रिभेदापीत्याद्यन्वयादिति भावः ।

पारायणभेदेन चेति शुद्धादीनामेषामवान्तरसकलभेदोपसंग्रहार्थमेतत् । लिपि-पारायणवच्चैतदूहनीयम् । तत्राकूटद्विकूटादिष्वेव पारायणसंभवो न शुद्धायाम् केवलस्वरूपत्वात् । तत्राकूटे तावत् ऐकारं कादित्रयस्त्रिंशद्व्यञ्जनयुतमुच्चरेत् । एवमौकारमिति । शुद्धादिभेदोऽत्रापीष्यत एव । द्विकूटे तु कैं इत्येतत् कादि-त्रयस्त्रिंशद्व्यञ्जनपिण्डितमुच्चरेत् । एवं खें गें प्रभृति सें हैं पर्यन्तम् । एवमुत्त-रबीजयोरपीति । त्रिकूटे तु तेषामेकैकस्यापि त्रयस्त्रिंशद्व्यञ्जनपिण्डनमित्यायू-हनीयम् । पारायणन्यासो वेदाभिप्रेतः । मूलाधारहृदयमूर्धसु दशद्वादशषोडश-दलकमलकर्णिकासु त्रिकोणानि विभाव्य तेषां रेखासु तिसृषु बहिरेकादशैकादश त्रिकोणानि स्मृत्वा मध्ये शुद्धायास्त्रीन् वर्णान् क्रमेण विन्यस्य परितस्त्रिकोणेषु तत्त-दनुबद्धानि कठवाद्येकादश व्यञ्जनानि न्यसेत् । एवमकूटपारायणन्यासः । द्विकूट-पारायणन्यासे तु बाह्यत्रिकोणरेखात्रयेषु बाह्यतस्त्रयस्त्रिंशत्त्रिकोणानि विभाव्य तत्तदकूटानुबद्धानि त्रयस्त्रिंशद्व्यञ्जनानि तेषु न्यसेत् । यथा खकैं खखैमित्यादि । एवमुत्तरेष्वप्यूह्यम् । ललितायां पञ्चदशवर्णात्मकस्य कूटस्य विधानाद्विवर्णादि-पञ्चदशान्तं कूटसंभव इत्यवबोद्धव्यम् । व्यञ्जनमध्ये स्वरोऽपि कूटतया गृह्यते कामराजविद्यायां तथा दर्शनादिति । अनन्तप्रकारत्वमिति । लिपिपारायणे तावत्स्वरब्रह्मपारायणपर्यन्तत्वात् कथंचित्पर्यन्तो दृष्ट एव । तथा सुभुघादि-पारायणेऽपि । त्रिपुरापारायणे तु नैवम् । प्रतिकूटं तत्तन्मन्त्राणां त्रयस्त्रिंशद्-व्यञ्जनानुबन्धयोगादिति भावः । जपो ध्यानमप्येवं भवति । तदुक्तं—न्यसेच्च न्यासप्रिय इत्यादि । त्रिपुरायोगतस्तु यल्लिपिपारायणं यदुक्तमुक्तपारायणमन्त्रास्ते तांस्तान्मन्त्रानुद्दार्यं न्यासादिकं कर्तव्यमिति तदन्यदेवेति । त्रिपुराभिधानामित्य-त्राप्यभिप्रायान्तरमाह—पुनरपीत्यादिना । मत्स्यादिपदेन त्रिगुणगत्यादिग्रहणम् । विष्ण्वादिपदेन च त्रिमूर्तीनां लक्ष्म्यादीनामपि ग्रहणम् । तत्तन्मन्त्रपदेन बीज-मन्त्राणामेकाक्षरदशाक्षरादीनां सर्वेषामपि ग्रहणम् । त्रिप्रभेदादिषु तदनुगत-त्रिपुरात्वमेव । न तु मन्त्राश्रयसंभवादिति प्रतिपत्तव्यम् । संयोगेनैव भिन्नामित्युपस्कारः । भेदमाहेति प्रक्रमादेतलभ्यते । किंचेह सर्गादिमादि-मनादिं चेति क्रमभेदे फलभेदो भवति । तत्र वाग्भवकामराजशाक्तक्रमः सर्गक्रमो विपरीतः संहारक्रम इतरः सर्वस्थितिक्रमः । तेषु फलभेद उक्तः—

धर्मवाक्सिद्धिकामानां जपे सृष्टिक्रमो भवेत् ।
अर्थकामार्थिनां गीतो जपे सद्भिः स्थितिक्रमः ॥
मुमुक्षूणान्तु सर्वेषां संहारक्रम ईरितः ।
मन्त्राचरन्यासविधावपि न्यायमिमं विदुः ॥ इति ।

केवलादिष्वपि फलभेदः । यदोक्तफलं प्रतिबन्धप्रचुरं तदा बिन्द्वन्ता मकारान्ता च स्यात् । यदा तत्फलं मन्दं तदापि सर्गान्ता । उभयसंभवे बिन्दुविसर्गान्ता । सामान्येन न तु केवलेति शुद्धा कूटद्विविकूटादिषु च यथोत्तरं फलवृद्धिर्भवति । किञ्च सङ्केतविद्यादिषु विजयादिषु च फलभेदः । पारायणसिद्धेष्वपि च समान मेतत् । पारायणन्यासे तु वीर्यप्रकर्षो भवति । त्रिमूर्त्यादिमन्त्रयोगे तु तत्तत्फलयोग इति ॥ १ ॥

त्रिमूर्तिमन्त्रेष्विति । ननु विद्यायां त्रिमूर्तिमन्त्रयोग इति वाच्यम् । विद्याशेषतयैवासुक्तत्वादिति । नैष दोषः । विद्यायां त्रिमूर्त्यादिशेषत्वमपि स्यादितीह सूच्यते । तेन त्रिपुरान्यासे त्रिमूर्त्यादिमन्त्रयोगः तन्न्यासेषु त्रिपुरायोगश्च यथासंभवं सिद्धो भवति । यद्वा स्वतन्त्रतया मन्त्रभेदोऽयं विद्यात्रिमूर्त्यादिसंयोगरूपो विवक्षितः तदा चोभयथापि वचने नास्ति विरोध इति । त्रिमूर्तिसर्गाच्चेति । तदुक्तम्—यथाभवन् ब्रह्महरीश्वराख्या इत्यादि । त्रिमूर्तयो विश्वसृष्ट्यादिशक्तिविशिष्टात्मानः तेषां सर्गादपि पुरा सती ज्ञेया । अतोऽस्यास्त्रिपुरेति नाम प्रायो भवति । त्रिमूर्तिभ्यः पुराभवत्वात्तन्मन्त्रेभ्यः प्रागस्याः प्रयोगः स्यात् । यद्वा त्रिमूर्तिषु कारणत्वेनानुगमात्तन्मन्त्रेष्वस्या अनुगमः स्यादिति विवरणाभिप्रायः । प्रायोग्रहणेनैतद्गम्यते । तेनैतावता नामनिर्बन्धनं परिपूर्णमिति । तेनैतदवसीयते । न केवलं वाच्यैस्त्रिभिरेव संबन्ध एव त्रिपुरात्वे निबन्धनम् किन्तु तदर्थगम्यं स्वात्मरूपं त्रित्वमपीति । तेनायमिहार्थः । त्रिभ्यः पुराभवाः स्वयं च त्रयः सती त्रिपुरेति । त्रिमूर्तिसर्गात् पुरा सती तदीयसृष्ट्यादिशक्तिः । समष्टिशक्तिः तच्छक्तीनामाश्रयत्वात्तद्योगिनी स्वयमपि त्रयी भवति । तदुक्तं—यदा त्रियोऽथ गुणयेदित्यादि । त्रयीमयत्वाच्चेति । देवताकर्माद्यभिधायिन ऋग्यजुःसामलक्षणा वेदास्त्रयी । सा च स्वार्थाभिधानक्रियायोगिनी क्रियाशक्त्यात्मिका भवति । पुरैव त्रयीमयी ज्ञेया । शेषं पूर्ववत् । तत्समष्टिशक्त्यावस्थां तदाद्यवस्थासद्भावात् त्रयीयोगः । लय इति । भूर्भुवः स्वरिति लोकाः त्रिलोकी । सा च महत्यपि प्रत्येकं देशकालादिपरिच्छिन्नैव । तस्याः प्रलयदशायां पूरणी ज्ञेया । शेषं पूर्ववदेव । प्राक् स्वस्वरूपतया परिपूर्णत्वेनावस्थितस्यार्थस्य देशकालादिविशिष्टतया परिच्छिन्नत्वेन व्यवहार-

योग्यतापादनमेव सर्गः । तदुक्तम्—एष सर्गः समुत्पन्न इत्यादि । तस्य पुनस्तद्विपर्ययेण प्रागिव परिपूर्णतापादनमेव संहारः । वक्ष्यति च—एवमुच्चारणात् पूर्वं पूर्णसंविदात्मना स्थितस्य प्रणवस्येत्यादि । तत्समष्टिशक्तौ तदाद्यवस्थासद्भावात् तस्याः वंशयोगः तदाद्यवस्थापादनमेव हि त्रयीति भावः । परशक्तिविवक्षायां सच्चिदानन्दरूपत्वम् । तदुक्तम्—स्वसंवेद्यस्वरूपा सेति । स्वापरप्रकृतियोगविवक्षायां गुणसाम्यात्मकत्वम् । तदप्युक्तं—पुरा प्रधानादिति । यद्वा त्रिमूर्तिसर्गाच्चेति वामाशक्तिरुक्ता । विश्ववमनयोगात् तस्या विश्वस्रष्ट्रादिसर्गशक्तियोगतः वंशयोगः । त्रयीमयत्वाच्चेति ज्येष्ठा शक्तिः । सा हि कर्माद्युपचयती विश्वं पुष्णती तदुचितदेवताकर्मादिसर्वमनुष्ठानपर्यन्ततयोपदिशन्ती त्रयीशक्तिर्भवति । सा च पुरुषाणां नियोगकारिणी ज्येष्ठाभिधीयते । लये त्रिलोक्या अपीति रौद्री शक्तिः । विश्वनिरोधयोगात् पूर्ववत् वंशयोगः । तस्यां समष्टिरम्बिका । सा च वामादित्रयशयोगतस्त्रिपुरेति । अथवा त्रिमूर्तिसर्गाच्चेति त्रिमूर्तिशब्देन वागर्थज्ञानप्रपञ्चानां ग्रहणम् । तेषां परशक्तौ व्याप्ततया स्थितानां मूर्तावस्था हि सा भवति । तत्र वाचः स्वार्थं प्रतिवचनं व्यापारस्तत्र ज्ञानं तद्विमर्शमयमेव वाक्प्रधानाश्चैते भवन्ति । तेषां सर्गः परशक्तेः परादिक्रमेण स्वस्वारनिरूप्यतयोत्पत्तिः । ततोऽपि पुरा सती ज्ञेया । शेषं प्रागुक्तवत् । वागादिसमष्टिशक्तेश्च तदादिदशायोगितया वंशयोगः । वाक्प्रधानानामर्थानां प्रभवस्थानत्वादस्या वाग्भवत्वं चार्थादुक्तम् । वाग्भवत्वे चार्थात् स्वयं वाग्रूपत्वं स्वरूपप्रकाशविमर्शस्वभावत्वम् । अतएव चिद्रूपत्वमपि सिद्धं भवति । तदुक्तम्—प्रकाशविमर्शरूपेण चिदानन्दरूपेण चेति । त्रिपुरायाः परविमर्शशरीरिण्या इति च । त्रयीमयत्वाच्चेति स्वरूपरसविषयानन्दात्मत्रयी पुरेवानन्दत्रयीमयी ज्ञेया । शेषं प्राग्वत् । सर्वानन्दकरत्वाच्चास्याः कामराजत्वमप्यर्थादुक्तम् । कामराजत्वे चार्थं स्वयमानन्दत्वं च सिद्धं भवति । विमर्शश्चिदेव स्वात्मविश्रान्तावानन्दः सम्पद्यत इति वाग्भवात्परं कामराजोपपत्तिः । लय इति । त्रिलोक्या वागर्थज्ञानप्रपञ्चत्वेऽप्यर्थप्रधानत्वे भेदः । प्रलये त्रिलोक्या अपि पूरणी ज्ञेया । शेषं प्राग्वदेव । तदादिदशायोगतयास्याः वंशयोगः । स्वयं पूर्णैव सती व्याप्त्या त्रिलोकीमपि पूर्णां विदध्यादिति तस्याः पूर्णत्वम् । त्रिलोक्या अपीत्युक्तविधार्थप्रपञ्चनिदानतया शक्तित्वमप्यर्थादुक्तं भवति । विमर्शचिदानन्दता प्राप्तः परा एव तत्रैव पर्यवसितः पूर्णा भवतीति कामराजात्परं शक्त्युपपत्तिः । वागानन्दपूर्णतायोगाद्वाग्भवकामराजशक्तियोगाच्च त्रिपुरात्वम् । वागादयः शक्ते रूपाणि । तेषु च विमर्शनस्य शिवस्य चिदानन्दरूपाण्यविशिष्टानि । तेषां स्वैरावस्था या

वाचास्पदत्वाद्वागादिरूपाणां पुरत्वम् त्रिमूर्त्यादीनामावासास्पदत्वाद्वाग्भवादीना-
मपि पुरत्वम् । ननु वाग्भवादीनां प्रत्येकं त्रिपुरात्वमिष्टोक्तमिति । नैष दोषः ।
शक्तेस्त्रिपुरात्वे तदंशानामपि तथात्वं संभवदुचितमेव हि भवतीति । प्रायोग्रहणे-
नान्यान्यपि सन्ति त्रिपुराभिधाननिबन्धनानीति सूचितम् ।

तदुक्तम्—शिवशक्त्यात्मसंज्ञेयं तत्त्वत्रितयपूरणात् ।
त्रिलोकजननी याथ तेन सा त्रिपुरा स्मृता ॥ इत्यादि ॥ २ ॥

मूले व्योमेन्दुवक्राधरबिन्दुभिरिति प्रस्तुतमध्यमपञ्चकूटविद्योद्धारः । व्योमेन्दु-
वक्रयोऽधरबिन्दू चेति समासः । इन्दुः सकारः । एकमिति प्रकरणाद्बीजमिति
लभ्यते । एवमन्यदित्यपि । रक्तो हकारः । अच्छः सकारः । क इति स्वरूपग्रहणम् ।
इन्द्रो लकारः । रमा ईकारः । अन्यदित्यपि बीजम् । द्युशीतकरौ मनुमन्तौ चेति
समासः । द्यौरीकारः । शीतकरः सकारः । मनुरौकारः । अमन्तो विसर्जनीयः ।
बीजैरमीभिरिति कूटस्थतया पृथग्गततया वा योजितैरिति भावः । अत्रैकमन्यद-
पीत्येवं निर्देशेनैतदपि सूचितम् । यद्यपीह वाग्भवकामराजशक्तिक्रमः परिगृहीतः
तथापि नैवं नियम इति तेनैषां बीजानां व्युत्क्रमोपक्रमश्च सिद्धो भवति । तदुक्तम्
—आदिमादिमनादिं चेत्यादि । अत्रामन्तेति बिन्दुविसर्गयोर्वा ग्रहणम् । विकल्पा-
भिप्रायं चैतत् । तेन तृतीयबीजान्तभेदेन विद्यान्तरमप्युक्तं भवति । इन्द्राधरबिन्दो-
रमार्धचन्द्रयोर्मन्वमन्तयोश्च पृथक्करणात् षड्बीजारोपिता ( पपस्तिः ? ) सेयं सङ्केत-
विद्येत्युच्यते । इह सन्मात्रं परशिवः स एवापरशक्तिप्रवृत्तिद्वारा निरूप्यमाणः परशक्ति-
र्भवति । तदपरशक्तिमात्रं शब्दार्थपरसमष्टिः स एव स्वाधिष्ठानपरशिवशक्तिविमर्श-
लक्षणः सकारः । तदुक्तम्—अनाहतशिवशक्ती अकारलक्षितावितीति । [illegible] चेयं
परशिवशक्तिविमर्शमात्रतयान्तर्मुखोऽपि संस्तदा ह । अनेनैव त्रिमूर्तिसर्गाचेति उक्त-
विधवाक्प्रपञ्चप्रसवस्थानतया तदुचितयोन्या ऐकारपरिग्रहोऽपि सन् वाग्भव ऐकारो
भवति । विमर्शयोगितया च तद्रूपः परशिवः प्रकाशलक्षणोऽपि भवति । स च
प्रकाशविमर्शस्य स्वरूपविश्रान्ततयानन्दो भवति । तदीयो विमर्श एवानन्दनम्
तदुचिततया सोऽकारो वाङ्मात्ररूपोऽवस्थान्तरं प्राप्नुवन्निकारः । स चैवमन्त-
र्मुखोऽपि संस्तयीमयत्वाचेत्युक्तस्वरूपरसविषयानन्दतया विष्टत्वाच्छक्त्यात्मकत्वाच्च
तदुचितमोकारं परिगृह्णन् कामराज ईकारो भवति । स चानन्दरूपः प्रकाश-
स्तदीयानन्दनरूपविमर्शस्य तत्रैव पर्यवसितत्वात्पूर्णो भवति । तदीयश्च विमर्श
इकाररूपोऽवस्थान्तरं प्राप्नुवन्नुकारः स चैवमन्तर्मुखोऽपि सन् लये त्रिलोय्या
अपीत्युक्तरूपसकलार्थनिदानशक्तिस्वरस्वभावभूतोन्मेषोन्नतारूपत्वाच्छक्तित्वाच्च तदु-

चितमूकारं तथानुहत्तस्वप्रकाशरूपा + + रोधिन्नयादितीकारं वाङ्मावरूपं च परिगृह्णन्नीकारः शक्तिर्भवति। सेयं शुद्धा सकलवर्णेषु स्वस्वार्थप्रत्ययपरेषु नित्यत्वादेकद्वित्रादिवर्णयोगिनी स्यात्। सर्वन्यासेषु च वर्णपदादिवाचकाना-मियान् त्रिरूपो विमर्शव्यापारोऽभिप्रेत एव।

तदुक्तम्—कृतकृत्यस्य जगति सततं रूढसंस्थितेः॥ इति।

वागीश्वर्योनिशयदतयेत्यत्र बालासिद्धिः वाग्भवं बीजमित्युक्तविधे वाग्भवं प्रतीयते। कामराजमुक्तमिति चाजकलाप्रथमावशान्तिभिरिति वक्ष्यमाणं कामबीजमपि प्रतीयते। शाक्तमिति च शक्तिसमूहस्य सकारौकारविसर्गरूपस्य प्रतीतिरिति। यदुक्तं—सकाररूपिणी शक्तिरिति। विसर्गः प्रकृतिर्मतेति च। सेयं कुलसुन्दरीत्युच्यते।

बालायास्त्रिषु बीजेषु विजयोपरि हौ यदि।
जीवविद्या सकारश्चेत्कुबविद्या ह्रसौ यदि॥
सह्रौ चेच्छक्तिविद्या कामाख्या त्रिष्वपि युक्।
मायाद्या मोहनी बाला तन्मध्या चोभणी मता॥
तदन्ता क्लेदनी सैव ग्रोकषष्ठाद्या महोदया।
शोधनीत्वं प्रतिष्ठाद्या पलिमन्ता मोहनी तु चेत्॥
मालिनी पञ्चकूटं चेत् सिद्धा बीजेष्वपि त्रिषु।
शुद्धा त्रिष्वपि बीजेषु निष्कला वाग्भवे तु वाक्॥
सिद्धैर्वाध्वं त्रिरेफेभ्यो उकारे त्वम्बिका भवेत्।
सिद्धा याष्टककारोर्ध्वं भूमिरेवोनलात्मकत्॥
त्रिषु बीजेष्वपि स्याच्चेत् + + + +।
बालैव कामवाक्छक्तिष्वमन्तानुत्तराक्षणाः॥
प्राक्कान्तियोनिशक्लेभ्यो यदि सम्पत्करी भवेत्॥
[ अवादर्शपुस्तके श्लोकैकः पतितः ]

सरसार्धचन्द्रेरित्यत्राभिप्रायान्तरं दर्शयति—सकाररूपिणीत्यादिना। सो रमते-ऽस्मिन्निति सरो हकारः। कथमियता हकारसिद्धिरिति। तत्प्रकारोऽपीहोच्यते। मस्तावच्छक्तिः। तदुक्तम्—म इति प्रकृतिर्मतेति। शक्तिश्च शिवे रमते। हकारश्च शिवः। तदप्युक्तम्—हकारः शिव इत्युक्त इति। तथा च सरो हकारो भवतीत्यर्थः। निष्कीलविद्योद्धारप्रकार इति। कीलमाविलम्। तदुक्तम्—वाग्भवः सविराविल इति। तद्रहिता निष्कीलविद्या सा च प्रकृतविद्यैव। सा च मध्यमपञ्चकूटा मिश्रविद्योच्यते। लिङ्गप्रकारापोत्युक्तनयेन सर्वपञ्चकूटा सिद्धा विद्यापि

